सम्बन्धकृतः । सम्बन्धश्चाध्यासिको भगवत्कृतश्च । आध्यासिको हि ज्ञानान्निवर्तते । द्वितीयो भगवतैव । जीवन्मुक्तानामपि व्यवहारदर्शनात् । श्रुतिस्तु भगवत्कृतसम्बन्धमेवाश्रित्याग्निहोत्रादिकं विधत्ते । अन्यथा विद्यां स्वज्ञानं च बोधयन्ती कर्माणि न विदध्यात् । शब्दज्ञानस्य पूर्वमेव सिद्धत्वात् । कथं सिद्धवद् यावज्जीवं विदध्यात् । न्यासोऽपि देहसम्बन्ध एव ॥ ४८ ॥

---

तथापि तत्तद्देहसम्बन्धकृतमागन्तुकं तद्द् भवत्येव । यथाम्बुदकपृथिवीनां स्वतो विध्याद्यविषयत्वेऽपि शवादिसम्बन्धान्निषेधविषयत्वं, श्रोत्रियादिसम्बन्धाच्च विधिविषयत्वं, तद्वदस्यापि देहसम्बन्धाज्जाते तस्मिंस्तत एव तत्फलसम्बन्धस्यापि सौकर्येण तयोरपि सार्थक्ये सति न शास्त्रार्थवत्त्वसूत्रव्याहतिर्न वा कर्ममार्गव्याकुलता । येन दुःखित्वाद्यनुपपत्तिरित्यर्थः । ननु देहसम्बन्धेन विधिविषयत्वे देहसम्बन्धस्याज्ञानकृतत्वाच्छास्त्रस्याप्यज्ञाधिकारकत्वं सिद्ध्यति । अज्ञानं च बुद्ध्युपाधिकस्यैव, न तु स्वत इति शास्त्रार्थवत्त्वसूत्रव्याहतिर्न परिहृता भवतीत्याशङ्कायामाहुः । * सम्बन्धश्चेत्यादि * । * स्वज्ञानमिति * । साङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यादिभिः स्वार्थज्ञानम् । * पूर्वमेव सिद्धत्वादिति * अध्यापनाध्ययनविधिभ्यां कृतेऽध्ययने तत्काल एव सिद्धत्वात् । तथाच कामाधिकारको विधिर्विश्वासोपजननार्थोऽज्ञाधिकारको भवतु नाम, यावज्जीवादिरूपो नित्यविधिस्तु नाज्ञाधिकारकः । अतो, न शास्त्रार्थवत्त्वव्याघात इत्यर्थः । ननु यावज्जीवविधिश्चेज्ज्ञानिपरस्तदा, यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यादिसन्न्यासविधिवैयर्थ्यम् । अतो नेयं व्यवस्था युक्तेत्यत आहुः । * न्यासोऽपीत्यादि * । तथाच जरामर्याग्निहोत्रस्य तत्रापि सम्भवान्न वैयर्थ्यम् । ये पुनर्ब्रह्मभूता आदितः साधनसम्पत्त्या वा देहसम्बन्धं नानुसन्दधते, दैवादपेतमुत दैववशादुपेतमिति न्यायेन देहं धारयन्ति पूर्णा एव ज्ञानिनस्तेषां तु शुकादिवत् स्वत एव तत्र तत्र प्रवृत्तेर्न विधिनियतत्वम् । अत एव, यं प्रव्रजन्त-

नानात्मानो व्यवस्थात इति भोगव्यवस्थया जीवनानात्वमङ्गीकृतम्। तत्रादृष्टस्य नियामकत्वं तन्मते सिद्धम्। देशान्तरवस्तूत्पत्त्यन्यथानुपपत्त्या व्यापकत्वं चाङ्गीकृतम्।

एवञ्च क्रियमाणे मूल एव कुठारः स्यात्। सर्वेषामेव जीवानामेकशरीरसम्बन्धात् कस्यादृष्टं तद् भवेत्। नच मिथ्याज्ञानेन व्यवस्था। तत्रापि तथा। नचानुपपत्त्या परिकल्पनम्। श्रुत्यैवोपपत्तेः। एतेन विरोधाद् ऋषिप्रामाण्यमपि निराकृतम् ॥ ५१ ॥

---

ईश्वरनियम्यत्वं नैयायिकादिभिरप्यङ्गीक्रियत एवेति कुतस्तदर्थं तन्मतनिराकरणमित्याकाङ्क्षायां तत्र तदनुपपत्तिबोधनाय तन्मतमनुवदन्ति * नानेत्यादि *। * तत्रेति * भोगव्यवस्थायाम्। * सिद्धमिति *। कार्यमात्रं प्रति जीवादृष्टस्य कारणत्वाङ्गीकारात् सिद्धम्। * देशान्तरेत्यादि *। सामग्रीसमवधाने हि कार्यमुत्पद्यते। तत्र सामग्रीमध्ये अदृष्टमपि प्रविष्टमिति देशान्तरे यद्भोगार्थं यद्वस्तूत्पद्यते तत्र तददृष्टमवश्यं वक्तव्यम्। अदृष्टं चात्मसमवेतं गुणत्वात्। अतस्तत्रात्माभावे तद्वस्तूत्पत्त्यभाव इति तदन्यथानुपपत्त्या तस्मिन् देशे तददृष्टवदात्मसत्ताऽऽवश्यकीति तेषां व्यापकत्वमङ्गीकृतमित्यर्थः। एवमनूद्य दूषयन्ति। * एवञ्चेत्यादि *। भोगव्यवस्थैतस्सर्वाङ्गीकारे जीवनानात्वव्यापकत्वसाधनहेतुभूतायां भोगव्यवस्थायामेव तच्छेदकदूषणपात इत्यर्थः। अत्र हेतुमाहुः। * सर्वेषामित्यादि *। * मिथ्या ज्ञानेनेति * शरीरेऽहमित्यभिमानेन। * तत्रापि तथेति *। सर्वेषामेकस्मिन् शरीरे सम्बन्धतौल्ये कथमेकस्यैवात्मनोऽहंममेत्यभिमानः। * विरोधादिति *। श्रुतिविरोधात्। तथाचाभिमानकारणस्य निर्वक्तुमशक्यत्वे तेन शरीरेण तत्तदिन्द्रियेण तत्तन्मनसा कृतं कर्म सर्वेषां सम्बन्धतौल्यात् सर्वकृतं सत् सर्वेषामेव तद्भोजकादृष्टं जनयत् सर्वेषां तद्वस्तुभोगाय स्यात्। एवं सर्वत्रेति भोगव्यवस्थाभङ्गात् तथा जीवनानात्वव्यापकत्वयोः सिद्धिरित्यर्थः ॥ ५१ ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

ननु मनःप्रभृतीनां नियामकत्वात् तेषामीश्वरेच्छया
त्वान्न दोष इतिचेन्न । पूर्ववदेव दोषप्रसक्तिः ।
च पूर्वमेव निराकृता ॥ ५२ ॥

प्रदेशादितिचेन्नान्तर्भावात् ॥ ५३ ॥

आत्मनो विभुत्वेऽपि प्रदेशभेदेन व्यवस्था ।
प्रदेशविशेषोऽस्ति येन सर्वमुपपद्यत इति चेन्न । अन्यस्यापि
शत्वान्तर्भवति । तस्यैव वा देहस्य देशान्तरगमने पूर्वदेशस्य

---

अभिसन्ध्यादिष्वपि चैवम् ॥
षयामाशङ्क्य परिहरतीत्याशयेन सूत्रमुपन्यस्य व्याकुर्वन्ति ।
नन्वित्यादि * । ननु विलक्षणसंयोगोत्पादकानां
माननियामकत्वात् तेषां चेश्वरेच्छया
इति चेन्न । कुत-। अभिसन्धिः पूर्वोक्तोऽभिमानस्तत्यादिभूतानि
णानि तेष्वपि, एवं पूर्ववदेव विभूनामात्मनां
नस्यापि तुल्यत्वान्नियमाऽसम्भवद्दोषप्रसक्तिः । नचेश्वरेच्छया
माधानम् । निमित्तभूतेश्वरकल्पनायाः पूर्वमेव निराकृतत्वात् ।
भ्युपगमेऽपि अनया प्रणाड्यास्यैवादृष्टमुत्पद्यतामिति यदयमेवं
कामित्यत एवात्मवादेऽप्याकारेण तस्यास्तुल्यत्वान्न व्यापकात्मसि
द्धिरित्यर्थः ॥ ५२ ॥

प्रदेशादितिचेन्नान्तर्भावात् ॥ आत्मनां विभुत्वेऽपि प्रदेशभे
दाङ्गीकारेण दोषसमाधिमाशङ्क्य परिहरतीत्याहुः । * आत्मन इत्या
दि * । अन्यस्येत्यादि * । तथाच पूर्ववदेव दोषप्रसक्तिरित्यर्थः । *
मप्यन्यस्य प्रदेशे स विशेषोनास्तीत्यदोष इत्यत आहुः । * तस्यै